दूरध्वनिसंकेतः – "संस्कृतम्"

वाणीं भजत गैर्वाणीम् !

# गैर्वाणी

## मासिकी पत्रिका

संस्कृतभाषाप्रचारिणी सभा, चित्तूरु. (आ. प्र.) भारतम्.

संपुटः ११ | 15 SEPTEMBER 1973 | क्रमांकः ९



प्रमादीच-भाद्रपदांकः

शकाब्दाः १८९५

मूल्यम् ०–४० पैसाः

# विषयसूचिका


१. अन्नं बहु कुर्वीत १
२. संपादकीयम् (प्रजाः के ?) २
३. सुभाषितानि ५
४. संस्कृतं सकलजनसमुपास्यम् ७
५. चित्तूरुनगरे संस्कृतविद्यायाः शुभोदयः ७
६. आकाशवाण्यां संस्कृते वार्ताप्रसारावकाशः परिशील्यते ७
७. तिरुपति केंद्रीयसंस्कृतविद्यापीठस्य नवीनः प्रांशुपालः ८
८. प्रतिवादिभयंकरं अण्णस्य ६२२ तमः जन्मदिनोत्सवः ८
९. डा. मंडनमिश्रैः अस्मत्सभासंदर्शनम् ८
१०. श्रीमण्डली ९
११. गणेशदण्डकः १३
१२. ग्रन्थपरिचयः १४
१३. सं. भा. प्र. सभायाः रजतोत्सवसमारोहः १५
१४. सर्वः स्वार्थं समीहते १६
१५. श्रीराधाकृष्णमहोदयानां जन्मदिनोत्सवः २१
१६. संस्कृतदिनोत्सवः २२
१७. वन्दे मातरम् २३
१८. गांधीकथा २५
१९. श्रीवेंकटेश्वर - अखंडज्योतिस्संचारक्रमः २६
२०. धनमूलमिदं जगत् २८
२१. श्रीशंकराचार्यः
२२. श्रीपेरुंबूदूरे श्रीरामानुजक्रतुः






# अन्नं बहु कुर्वीत

अस्थिगताः प्राणाः कदाचित्
मांसगताश्च ते कदाचित्
चर्मगताः ते कदाचित्
अन्नगता अधुना तेऽनुभूयन्ते ।।

अन्नेन विना किं विद्यया?
अन्नेन विना किं धनेन?
अन्नादृते किं वेषेण?
अन्नादृते किं भूषाभिः? ।।

अन्नं दुर्लभं भारतेऽद्य
अन्नं अदृश्यं क्षेत्रेऽद्य
अन्नदा अन्नातुरा अद्य
अन्यमुखप्रेक्षकाश्चेत्थम् ।।

बह्वस्त्यन्नं भारते
बह्वस्ति तच्छन्नं भारते
राजनीतिर्हि हिनस्ति प्रजाः
को हि त्राता भवेत्प्रजानाम् ।।

# सम्पादकीयम्

## प्रजाः के ?

भारते के वा प्रजा इति प्रश्ने झटित्येव उत्तरितुं नैव शक्यं, किंचिदालोच्यैव समाधातव्यम् । मूढास्तु वदेयुः भारते विद्यमानाः सर्वेपि मानवाः तत्प्रजा इति । किन्तु तन्न सत्यम् । प्रजाप्रभुत्वनाम्नि अस्मिन् पालने येषां येषां सौविध्यं आचर्यते त एव मनुजा प्रजा भवितुमर्हन्ति, नाऽन्ये । कार्मिकाः, कर्षकाः, हरिजनाः, गिरिजनाः, निर्दिष्टाः पश्चाद्भूता इति बहुभि र्नामभिः विभक्ताः जना एव अत्र प्रजा भवेयुः । इतरे अपि यथाकथंचित् निर्वाचिताः विधानराज्यसभासदस्याः प्रथमगण्याः प्रजा भवन्ति । तत्तोषणमेव सकलप्रजातोषणमिति भावयति सर्वकारः । अतः सामान्यप्रजानां हाहाकारेषु बधिरयत्स्वपि दिशः बधिरीभूय भूयः स्वपन्थानमेवानुयाति ।

वस्तूत्पत्ति मभिवर्धयितुं वांछन्नपि कार्मिकवर्गबन्धादिकान् उपष्टंभयति । लाभाभावेपि, प्रत्युत नष्टेपि अनुभूयमाने कार्मिकेभ्यः नियतं नभोन्यासमादिशति । अशक्ततया कर्मागारे पिहिते तन्नेतॄन् दण्डयति । कार्मिकाणां कर्मणि नियमो नास्ति, कार्मागारिकाणां च कठिननियमा इति ध्रुवं एतद्राज्यं कार्मिकाणामेवेति । आत्मवितते जाले सर्वकारेणात्मैव पातितः "अन्तर्गुडगुडायते बहिर्वक्तुं न शक्यते" इत्यन्यदेतत् ।

तथैव कर्षकविषयिणी नीतिरपि तत्प्रभुत्वमेव प्रकाशयति । कर्षकेभ्यः विद्युत् अल्पप्रतिफलेन समर्प्यते, बीजानि वितीर्यन्ते, दोहदवस्तु सस्यौषधानि सम-

र्यन्ते । प्रभूतं ऋणं दीयते कूपयन्त्रवृषभट्राक्टरादिसंपादनाय। ऋणे च अल्पवृद्धिः आदिश्यते, खंडशः प्रत्यादीयते। अदानेपि सह्यते। उत्पादितस्य वस्तुनः मूल्यह्रासे संभाविते स्वयमेव निर्णीतमूल्यदानपूर्वकं आदत्ते। कृषिपंडितानां वाणिज्यविदुषां च साहाय्यसंपत्ति तेभ्योऽर्पयति। लाभकरसस्यारोपयाण सर्वं बलं ददाति, तद्विक्रयाय विपणिं च निर्दिशति। स्वसूचितपथा तेषु कर्षकेषु आहारधान्योत्पादने स्वस्य अलाभं, वाणिज्यसस्योत्पादने आत्मलाभं च निश्चित्य, शालिगोधूमादिकक्षेत्राणि इक्षुमूलफलीधूमपत्रादि - योग्यत्वेन परिणमय्य तत्तत्सस्यान्येवोत्पाद्य अन्नकणार्थं अक्षेत्रवद्भिः सह परिमितदापणप्रांगणेषु पंक्तिषु पुरस्सरत्सु, सर्वकारः पुरस्करोति तान् विदेशीयद्रव्यसंपादकत्वं तेष्वाकलय्य। अतः एवं उभयलाभवन्तः कर्षका एव खलु प्रजाः।

उद्योगनियुक्ताश्च सुप्रजाः- यतस्ते वेतनस्याभिवृद्धिं दिने दिने अभिवांछन्तः उत्कोचसंपादनस्पर्धाळवः स्वपुरतः उपस्थिताः समस्याः जटिलयन्ति अपाकुर्वंति विलंबयन्ति अन्यथयन्ति वा यथेच्छम्। स्वेच्छया सर्वकारं स्तम्भयन्ति चालयन्ति पातयन्ति उन्नमयन्ति वा स्वबलात्।

हरिजनाश्च गिरिजनाश्च सर्वकारपरिवारेषु मुख्यांगीभूताः प्रमथाधिपस्य प्रमथगणा इव परिषाल्या विभाव्यन्ते। तदर्थं परिपालनविभागः कश्चन संस्थापयिष्यते इव। रक्षकभटस्यापि आधिकारिकवेष - सद्भावसमये एव अधिकारः, एतेषां तु जातित एवाधिकारः संक्रमितः। स च चौर्यं करोतु, हत्यां विदधातु वा तत्स्पर्शने ताडने दंडने वा आघोष्यते "हरिजनेषु अत्याचारा असवर्णानां" इति। प्रायशो ग्रामेषु नगरेषु वा दुर्बल एव न्यायालयं गच्छति, सबलस्तु स्वबलेनैव न्यायं साधयति अन्यायं वा। एवं स्थिते हरिजनैः कृतानामपराधानां प्रतीकारे सबलैः कृते तत्र केवलमाक्रोशः व्यर्थ एव। यदा सर्वकारः न्यायान्यायविवेचने अलसो भवेत्तदा प्रजा एव स्वीयं न्यायं येनकेनाप्युपायेन साध-

येयुः। हरिजनेषु अत्याचाराणां वारणाय समुत्सुकेन सर्वकारेण तेषां सदाचारसमुद्बोधनं प्रथमतो विधेयम्। अन्यथा हरिजनाः सर्वकारसहायगर्विता दुष्कृत्यानि इतोप्यधिकतया कुर्युः। तेन असवर्णाश्च तद्दण्डनाय स्वयमेव यतेरन्। इदमाश्चर्यं जनयति पूर्वं प्रकाशिता काचन वार्ता- हरिजनेषु हरिजनानामत्याचार इति। किमियमपि वार्ता औत्सुक्यदायिनी? किं मनुजेषु वर्णभेदपुरस्कारेणैव कलहा भवेयु? पूर्वं युद्धानि क्षत्रियेषु परस्परं नाभवन्? ब्राह्मणेषु वादभेदा नाऽभूवन्? वैश्येषु वाणिज्यकोलाहलो नासीत्? शूद्रेषु वा क्षेत्रसीमा - जलकुल्यादि विवादा नाभूवन्? तत्र सर्वत्र अनुत्पन्नस्य आश्चर्यस्य हरिजनानां परस्परकलहे समुद्भवस्य को हेतुः? न ज्ञायते।

अथवा स्वदुरभिमान एव तत्र कारणम्।

अभिमानश्च स्वार्थचिंतारहितो यदि भवेत् सह्य एव। नात्र तथा, ग्रामेषु परस्परं भेदमेव समुत्पाद्य बहुलसम्मति संपादनमेव संकल्पितमिति तस्य नीचता। न केवलं इदं दूषणम् ऊहाकल्पितं हरिजनहास्टलानां अनाथहास्टलानां प्रवर्तनरीतिं संपश्यन् सर्वकार एव तदाधिपत्यं स्वायत्तीकर्तुमुत्सुक इति एतदेव एतादृशानां मनोभावानां निरूपकम्।

तद्यथा तथा वास्तु। हरिजनादीनां परिपालने सर्वकारः बद्धकटिरिति हेतो तदभिप्राये ते एव प्रजा नाऽन्ये।

एवं प्रजाप्रभुत्वनाम्ना सकलप्रजासौकर्यमविगणय्य, वर्गभेदान्, वर्णविभेदान्, सिद्धांतभेदान् प्रकल्प्य परिपोष्य च भारतं दूरतः परिपीडयत इति खेदावहोयं विषयः।

सेटास्सर्वेपि कोटीशा इति, विप्रास्सर्वेपि संप्राप्तधनधान्या इति, क्षत्रियास्सर्वेपि प्राप्तराज्या इति संघश भावनया संक्षेमसमुपेक्षणं च तेषां अप्रजात्वव्यंजक सत् देशराज्यांगानां कतिपयानां दुर्बलताया आपादकं प्रथते। संकुचितदृष्टया अनया मेधाविनां परिपालनरंगाद्दूरमवस्थापनाच्च राज्यशासनमेव शोचनीयं संपद्यते।

**सर्वेत्र सुखिनस्सन्तु सर्वे सन्तुनिरामयाः।**

***

## संस्कृतं सकलजनसमुपास्यं

देहल्यां संस्कृतदिनोत्सवे भाषमाणः केन्द्रमन्त्री एवं प्राह– बह्वीनां भाषाणां संस्कृतं मातृका भवति । संस्कृताध्ययनेन द्वारेण भारतीयमहोन्नतसंप्रदायानां उज्वलता अवगम्येत । देशस्य एकत्व-भावना संस्कृतद्वारेणैव दृढा भवेत्, मनुजस्य नैतिकौन्नत्यं च संस्कृ-ताभ्यासेनैव वर्धेत । अतः संस्कृतं सरळमार्गेण सर्वप्रजासुलभं करणीयमिति ।

## चित्तूरुनगरे संस्कृतविद्यायाः शुभोदयः

चित्तूरतपोवने ८–८–७३ दिने श्रीगौतमीजीवकारुण्यसंघ-संस्कृतप्राथमिकपाठशाला, श्रीमळयालस्वामि संस्कृतोन्नतपाठशाला च समारब्धौ । एतन्निर्वाहार्थं च तपोवनपार्श्वप्रतिष्ठापितचलचित्र-प्रदर्शनभवनीय आयः पंचशतं मासिकं समर्प्यते इति वाचा प्रति-ज्ञातवन्तः राजमहेन्द्रपुरस्थाः गौतमीजीवकारुण्यसंघनिर्वाहकाः एतत्संघटयिता श्रीरामचन्द्रन्, एम्. ए. महोदय (प्रांशुपालः प्रोद्द-टूर संस्कृतकलाशालायाः) श्च अभिनन्दनार्हाः ।

## आकाशवाण्यां संस्कृते वार्ताप्रसारावकाशः परिशील्यते

यात्रापौरविमानयानविभागामात्यायाः सरोजिनीमहिष्याः आध्यक्ष्वे ३–९–७३ दिने देहल्यां संस्कृतकार्यक्रमसंसूचनासंघ-स्समाविष्टः । तत्र समावेशे समाचारप्रसारविभागमन्त्री डा. के. गुज्राल् भाषमाणः "संस्कृतं सुसंपन्नभाषेति विषये संदेहलेशोपि नास्ति । तस्मात् तस्य आधुनिककार्यानुगुणं आकाशवाणीकार्य-क्रमेष्वपि उपयोगः अत्यंतावश्यक" इति च अवोचत् । ए. ऐ. आर्. संप्रति संस्कृतपाठान् प्रसारयतीति च निवेदितम् ।

## तिरुपति केन्द्रीयसंस्कृतविद्यापीठस्य नवीनः प्रांशुपालः

डा. मंडनमिश्राणां अलहाबादविद्यापीठप्रांशुपालत्वेन गमनात् तिरुपतिस्थस्य केन्द्रीयसंस्कृतविद्यापीठस्य, तिरुवनंतपुरीय-सर्वकारीय - संस्कृतकलाशालायाः प्राक्पट्टभद्रप्रवाचकः श्री करुणाकरः प्रांशुपालत्वेन नियुक्त इति परमानन्दस्थानम् ।

## प्रतिवादिभयंकरं अण्णस्य ६१२ तमः जन्मदिनोत्सवः

सुप्रसिद्धस्य श्रीवेङ्कटेश्वरसुप्रभातस्य रचयिता महापण्डितः प्रतिवादिभयंकरं अण्णा इत्ययं महात्मा सौम्यजामातृयोगीद्रसमकालिकः तिरुमले श्री श्रीनिवासस्य तीर्थकैंकर्यकर्ता आसीत् । तद्रचितमेव सुप्रभातं असेतुशीतनगं गीयतेऽद्य । तस्य महानुभावस्य जन्मदिनोत्सवः श्रीमन्नारायणरामानुजजीयरस्वामिभिः आयोजितः महावैभवेन तिरुमले समपद्यत ।

## डा. मंडनमिश्रैः अस्मत्सभासंदर्शनम्

तिरुपति केन्द्रीसंस्कृतविद्यापीठस्य प्रांशुपालाः डा. मंडनमिश्रमहोदयाः श्री डि. सत्यनारायणमहोदयै, श्रीधरवासिष्ठ महोदयैश्च साकं २८-८-७३ दिने संस्कृतसभासंदर्शनार्थं आयन् । तत्संदर्भे सभाकार्यदर्शिना श्रीरामनाथार्येण प्रधानमन्त्रिणा तिरुवेङ्कटाचार्येण कार्यनिर्वाहकसभ्यैः श्रीमुनिरेड्डि प्रभृतिभिः पंडितैः न्यायवादिभिरन्यैश्च तेभ्यः स्वागतमावेदितं । मिश्रमहोदयाः सभायाः ग्रन्थालयं, परीक्षाविभाग, प्रकाशनविभागं, पत्रिकाविभागं च संदृश्य प्रमुदिता अपि अपूर्णं भवनं आलोक्य अखिद्यन् । सभापरीक्षाणां केन्द्रप्रभुत्वमान्यताविषये तेषां अभिनिवेशः तेषां भाषणेषु प्रस्फुटोऽभवत् ।

# श्रीमण्डली

( नाटिका )

विद्यावाचस्पति, महोपाध्याय, साहित्याचार्य, कविसार्वभौम, कवीन्द्र,
**श्री शिवशङ्करशास्त्री, साहितीसमितिः, ओंगोलु.**

(पूर्वानुबन्धः)

स्वामी – हन्त! यथा ग्रीष्मे भूमिस्सन्तप्ता शीतलवर्षशीकरार्थं प्रतीक्षते, तथा मम शिष्या उत्कण्ठिता भवन्ति। मठेऽस्मिन् सर्वतापा हरिष्यन्ति ···· । अष्टमघण्टिकायां अत्रागच्छतेति ता वदत यूयम् ।

अनाथाः – सर्वास्ता मठमानेतुं बाध्यता अस्माकमेव (इति प्रेंखोलनादुत्थाय स्वामिनो नमस्कृत्य निष्क्रान्ताः ।)

इति प्रथमरङ्गः

## अथ द्वितीयो रङ्गः

(ततः प्रविशति ऊर्मिला; विंशतिवर्षीया, गौरवर्णा, तनुदेहा, कोपना च । नागिनीसदृशवेणी वक्षोजयोर्लम्बते। नेत्रे अरुणे वामे च ।)

ऊर्मिला – (एधन्ती) मम आनन्द, मम सर्वस्व ! (प्रेंखोलकफलकोपरिभागे उपविशति । स्वामी तस्या मूर्धानं हस्तेन परामृशन्, तामुपलालयति ।) हन्त ! स्वामिनः, कियत्कालमेष तापस्सोढव्यः ? कियत्कालमेतां गोपिकां परीक्षन्ते ? हृदयभारस्तु नितरामेधते । (अतीव रोदनं करोति सहिक्कम् ।)

स्वामी – परिपक्वां स्थितिमाप्नुहि ।

ऊर्मिला – स्थितिर्मम परां काष्ठां प्राप्ता । युष्मान् क्षणकालमपि त्यक्तुं न शक्नोमि । (स्वामिनो हस्ते गृहीत्वा निपीड्य

च, निजवक्षसि गाढं योजयति) यद्यहं भवतस्त्यक्त्वा गच्छामि, तदा क्षणोऽपि युगो भवति ।

स्वामी -- त्वं भर्तारं कथं वञ्चयित्वा आगतासि ?

ऊर्मिला – महानसकवाटं दुर्बलमुद्धृत्य पश्चान्मार्गेण आगताऽस्मि । इन्द्रियाणि मां पुरत आकृष्य नयन्ति । लज्जा द्रवीभूतप्राया । बत! मम हृदयधन! (स्वामिनः अंकतलोपरि शिरो निक्षिप्य दीर्घं निश्वस्य पार्श्वतः परावृत्य शेते) (स्वामी तु तस्या वेणिकाया अन्त्यभागे (RIBBON) विमृशति)

स्वामी– सुष्ठु कृतम् । अचिरात्ते मोक्षो भविष्यति । सर्वाणि पापानि च हरिष्यन्ते ।

ऊर्मिला – अलं गृहेण, पत्या, श्वशुराभ्यां च । भवत्पद-सन्निधाने मम सर्वस्वमर्पयामि ।

स्वामी – सर्वस्वसमर्पणेन मुक्तिस्ते ।

ऊर्मिला – गृहं गन्तुं न शक्नोमि । युष्मान् न त्यजामि च । एष मठो मम शरणम् ।

**आनन्दो मम हृदये**
**ब्रह्मानन्दो मानसे मम ।**
**सान्निध्यं हि मम गुरोः**
**ब्रह्मानन्दः प्राप्तवत्याः ।।**

(द्वारसमीपे पदध्वनिश्श्रूयते । ऊर्मिला सहसा किंचिद् दूरमपसृत्य बाष्पबिन्दून् मुञ्चन्ती निषीदति । इन्दिरा, सरला, रोहिणी च दक्षिणपार्श्वतः प्रविश्य स्वामिनं नमस्कृत्य तस्यैव पार्श्वे प्रेंखोलफलकोपरि निषीदन्ति)

(सर्वाः)

**दास्योऽहं दास्योऽहं**
**गुरुकारणलब्धभक्तानाम् ।**
**पिपीलिका दाब्रह्म**
**शुश्रूषतां पूर्णगुरुम् ।।**

सरला – पद्मगन्धासक्तो भृङ्गः अन्येषु पुष्पेषु कथं लगति मम स्वामिनः ! (कटाक्षविक्षेपः)

स्वामी -- न गच्छति । इदानीमपि भवतीनां भर्तुव्यामोहो वर्तते । तस्य हरणेनैव तापाः शाम्यन्ति ।

सरला– पापानि यदा शाम्यन्ति, तदा तापा अपि शाम्यन्ति ।

स्वामी – समस्तं लयं याति । कुतस्ते सन्देहः ?

रोहिणी – सर्वान् धर्मान् परित्यक्ष्यामः ।

सरला – धर्मेभ्यो हस्तोदकं दातुं साम्प्रतम् ।

इन्दिरा – बाढम् ।

ऊर्मिला – बत ! इदानीमपि धर्मानवलम्ब्य मा तिष्ठत । समस्ततापहारिणः स्वामिनः प्राप्तिः उत्तमो धर्मः ।

स्वामी – रोहिणि, गतयामिन्यां त्वं पूजायै कुतो नायाता ?

रोहिणी – तापस्य भारं सोढुमक्षमा भवन्तमेव ध्यायन्ती यामिन्याम् ···· ।

स्वामी – अपि भर्ता ते त्वां लालयति स्म ?

रोहिणी – तस्य हस्तस्पर्शेन मम गात्रे उत्कटस्ताप उदेति ।

स्वामी – सुष्ठु कृतम् । भर्तारमपि साधनपथे प्रवेशयसीव ज्ञायसे ।

रोहिणी – तस्य प्रस्तावेन स्वामिनः कुत मां बाधन्ते ?

स्वामी – कथं तं वञ्चयित्वा आगतासि ?

रोहिणी – बृन्दावनगोपिकाया स्सरणि मनुसृत्य कवाटं तिर्यक् विधाय तस्मिन् स्वपिति सति अहमुत्थाय अत्रागतास्मि । भवत्पादौ मुक्तिप्रदौ ।

ऊर्मिला – भवत्पादौ मुक्तिकान्तामनोमोहनौ ।

रोहिणी – भवतां बाहू मुक्तिकान्तास्वयंग्राहकौ ।

अन्याः – भवानेव अस्मद्धनं, नः प्राणाः, सर्वस्वं च ।

(स्वामी तासां शिरांसि जिघ्रति)

सर्वाः – अस्माकं हृदयपत्राणि त्रोटयित्वा भवद्भ्यस्समर्पणं कुर्मः ।

युवतीजनानां ध्रुवा गीतिः
(युवतयः प्रेंखोलयन्ति)
(अजातशिशूनां बृन्दगीतिः)
(अदृश्यगीतिः)
(सर्वाः)

**ॐ नमस्सच्चिदानन्द-**
**रूपाय गुरवे नमः ।**
**ॐ नमः चित्स्वरूपाय**
**श्रीमत्सद्गुरवे नमः ।**
**श्रीमदानन्दरूपाय**
**श्रीमत्सद्गुरवे नमः ।**
**ॐ नमस्सच्चिदानन्द-**
**रूपाय गुरवे नमः ॥**

स्वामी – ॐकारो धनुः । यूयं सर्वा जीवाः । जीवा एव बाणाः । अहं तु ब्रह्म । ब्रह्मैव तल्लक्ष्यम् । अहमेव वः प्राप्यवस्तु । एतदेव भवद्भिः ज्ञातव्यम् ।

सर्वाः – यदि वयं तरिष्यामः, मठ एव तरिष्यामः । एष एव सत्याग्रहः ।

स्वामी – युष्माकं किमपि नष्टं न भवति, अहमस्मि किल सर्वस्मै ।

(सर्वा निष्क्रान्ताः)

**इति द्वितीयरङ्गः**



**– (अनुवर्तते)**

# गणेशदण्डकः

ले. श्री बालगणपतिभट्टः, श्रीरंगपत्तनम्.

एकदन्तः सभां पातु हरिन्मणिसुपीठगः ।
मुक्तालड्डुकरोद्भासी हेमघण्टाविभूषितः ॥

शैलशृङ्गाग्रनिलयं शीतपिष्टप्रियं विभुम् ।
शश्वन्नमामि विघ्नेशं शिशुरूपं विनायकम् ॥

जय शृंगाद्रिसंवास जय रक्तोत्पलद्युते ।
जय विघ्नाद्रिदम्भोले जय मौनीन्द्रवन्दित ॥

जय जय गणनाथ गौरीमुखाम्बुरुहानन्ददानाब्जबन्धो, सुरेन्द्रादिवृन्दारकैः पूजितांभोरुहाङ्घ्रे, नुतानन्तविघ्नाद्रिदम्भोलिरूप, जयगिरिसुताङ्गपङ्केन संसृष्टगात्र, स्वगेहावनायात्ममात्राकृतादेश, तत्रागतेशानसंरोधशीलाथ कृत्तोत्तमाङ्ग क्षणात् । गहनविपिनदेशनिद्रादृतैकद्विपेन्द्रास्य धारणेनेभवक्त्रेति दत्ताभिधान प्रभो, दन्तहस्ताङ्कुशाद्यायुधैर्दानवार्तिप्रद, जय गणपदशोभितेशाच्युताजादिवन्द्याङ्घ्रिपङ्केरुहारूढमूषैकदन्तोज्ज्वलादित्यकोटिप्रतीकाश, विघ्नेश मां पाहि मां पाहि मां पाहि ।

जय जय भगवन्मनस्कृन्मयूरेश, मान्यातिमान्यामरामोद, हे सिंहुवाहेन्दुचूडावतंस, द्विपारे, कृपालो, पुरा भार्गवार्तिप्रद, पशुपतिसुत, पन्नगाभूषणापूर्वतेज प्रभोल्लास, हे रत्नसिंहासनारूढ, रात्रिञ्चरार्तिङ्कराऽनन्तमूर्ते हरे, विश्ववन्द्य प्रभो, कपिल, विकट, भक्तचिन्तामणे, पत्रदूर्वाङ्कुराभ्यर्चनाप्रीत, रक्तसूनप्रियानन्तसौभाग्यदाने वदान्य, त्रयीमन्त्रवृन्दस्तुत, जय जय यदुनन्दनानन्दबन्धो, महाम्भोधिपीतर्षिवन्द्य, प्रमोदाख्य, हे सिद्धिदातस्स्वयंबुद्धिनाथाद्य, हेरम्ब, मां पाहि मां पाहि माम् ।

जय जय जगदादिहेतो, जगत्राणहेतो, जगन्नाशहेतो, जितानङ्गजाताज, दारिद्र्यनाशाखिलाज्ञानदूरैकबन्धो, सुराध्यक्ष हे, जय जय गिरिजागिरिशोरुखेलासक्तचित्त, हस्तैश्चतुर्भिर्युतामेय, शुभ्रांशुतीक्ष्णांशुवैश्वानराक्षित्रयोपेत, तारारिपूर्वोद्भव, जय कलिकलुषान्तकानन्तसौख्यप्रदानन्तवैभवप्रपूर्ण, हेरम्ब, लम्बोदर, ब्रह्मरूपिन्नग्रगण्य हे सामजोद्दाम, मोदप्रिय।

जय जय यतिलेखनोद्भूत, तुङ्गातटोद्भासिशृङ्गाद्रिमध्याद्रिशृङ्गोपलस्तम्भमध्यस्थ, भक्तेप्सितादानदीक्षाद्य, मां पाहि मां पाहि माम्।

बालपूर्वगणेशेन रचितं दण्डकं शुभम्।
ये पठन्ति नरा भक्त्य तेषां सन्मङ्गलं भवेत्॥

## ग्रन्थपरिचयः

**श्रीजयन्ती**
**संग्रहीता श्री आ. वरदराजः,**
शिरोमणिः
मूल्यम् रू. ०–७५.

अत्र संग्रहे श्रीकृष्णावतारघट्टः, गोपिकागीतं, रुक्मिणीकल्याणं इति भागवतोद्धाराः संकलिताः सौकर्याय अल्पमूल्य ग्रन्थप्रकाशनविधया ज्योतिस्संश्लेषविद्यापीठेन (नडवलूरुग्रामस्थेन, तिरुपतिसमीपस्थेन) अयं संग्रहः प्रकाशित। आन्ध्रलिप्यां मुद्रणात् सर्वेऽप्यान्ध्रभाषाभिज्ञाः संस्कृतप्रेमिणः एतत्सौकर्यं अंगीकृत्य प्रकाशकानां प्रोत्साहं दद्युरिति सूच्यते।

**क्षीरसागरसंभवा**
**संग्रहीता श्री आ. वरदराजः,**
शिरोमणिः.
मूल्यम् रू. ०–७५.

अयमपि संग्रह एव। अस्मिन् संग्रहे श्रीमहालक्ष्म्याः प्रादुर्भावः, (भागवतोद्धारः) श्रीलक्ष्मीनारायणवैभवं, (विष्णुपुराणो-

द्धारः) श्रीलक्ष्म्यष्टोत्तरशतनामस्तोत्रम्, श्रीस्तुतिश्च (विष्णुपुराणोद्धारः) संकलिताः आन्ध्रभाषायां आन्ध्रलिप्यां च छायाव्याख्यया साकं संयोजिताः। स्वल्पमूल्यपुस्तकप्रकाशने प्रवृत्तस्य ज्यो. सं. विद्यापीठस्य प्रकाशनानि विशेषतः आन्ध्रप्रदेशे आन्ध्रभाषाभिज्ञैः संस्कृतप्रेमिभिः प्रोत्साहनीयानि।

**सार्वभौमाय रू. ०–५०, अस्मद्भारतम् रू. ०–५०,**
**सुभाषितसंग्रहः रू. ०–५०, स्तोत्रसंग्रहः रू. ०–५०.**

संग्रहीता – श्री आ. वरदराजः, शिरोमणिः,। एते संग्रहाः सर्वेऽपि निम्नलिखितसंकेतात् प्राप्तुं शक्यन्ते।

श्री आ. वरदराजः, (अध्यक्षः, ज्यो. सं. विद्यापीठम्) 17-5-11, सुबेदारवीथी, चित्तूरु.



# संस्कृतभाषाप्रचारिण्यास्सभायाः रजतोत्सवसमारोहः

विघ्नपरंपरया बहुविलंबितः एतत्सभायाः रजतोत्सवः अक्टोबरमासीय १२, १३, १४ तिथिषु निर्वर्तयिष्यते। आगन्तुकानां पण्डितानां संस्कृताभिमानिनां च कृते आतिथ्यसन्नाह आह्वानसंघेन क्रियेत।

महात्मनां भाषणानि, संस्कृतग्रन्थप्रदर्शनम्, संस्कृतरूपकप्रदर्शनम्, संस्कृतग्रन्थाविष्करणम्, संस्कृतगेयाभिनयः, अवधानं इत्याद्यंशाः निर्वर्त्येरन्।

सर्वेषां संस्कृतप्रियाणामुपस्थित्यै, अथवा शुभसंदेशप्रापणाय च सप्रश्रयं अर्थयते।

**ति. कं. तिरुवेङ्कटाचार्यः,**
प्रधानमन्त्री.



# सर्वः स्वार्थं समीहते

लेखकः श्री ना. ब. निगमान्तः, प्रोद्दुटूरु.

अतिविशालोयं लोकः। अत्र निवसन्तो जना असङ्ख्येयाः। तदीया आशया अप्यपरिमिताः नानाविधाश्च भान्ति। ते हि केचन देवालयीयगोपुराग्राणीव अत्युन्नतप्रवृत्तयः,केचन निम्नतलं धावन्तो जलप्रवाहा इव अतिनीचप्रवृत्तयश्च विराजन्ते। स्वरूपतो नामतश्च भिन्ना अपि एते समानलक्ष्यकाः समेधन्ते। तत्तादृशं समानं लक्ष्यं तु किं तत् ? स्वार्थसिद्धिरेव, न त्वन्यत्। न सर्वेषामपि ईदृशमेव लक्ष्यमित्युच्यते। सूर्यस्तपति, वायुर्वाति, मेघो वर्षति, पृथिवी उप्तादपि धान्यादधिकं उत्पादयति, जलं पीतं तृषितानां पिपासां शमयति, वृक्षः स्वच्छायया आतपखेदितानां श्रममपनुदति। एषां प्रतिफलप्रतीक्षा नास्ति। परसुखोत्पादनं एतल्लक्ष्यम्। एवंविधविशालहृदया नरा अतिविरलाः। अतः प्रायोवाद एवाऽयम्। एवं च मनुष्यः स्वार्थसिध्यै समाजे प्रवर्तते, वदति समार्जयति, अनुभवति च। इदं सर्वविदितमेव न त्वपूर्वं, नाप्यविदितपूर्वं। एवन्न मया केवलमुच्यते। लोकोद्धरणाय, निष्कण्टकप्रजाजीवनाय, समाजसंस्करणाय च सततं प्रवर्तमानः स्वजीवितकाले लोकनियत्यनुसारं दुःखं बह्वनुभूय अन्ते सकलनिराकृतः घोरदारिद्र्यसंक्षोदितः प्रतिक्षणं कृतान्तागमनं प्रतीक्षमाणः एषोपि वदति श्रूयताम्।

विजनः विशङ्कटश्च कश्चन नागरिकोपेक्षितो भूभागः। तत्र आतपात् वर्षात् वायोर्वा त्रातुमसमर्थः कश्चन अबकेशी पादपः। तस्याधस्तात् स्वहस्तमुपधानी-

कृत्य मलिनाम्बरधरः रूढश्मश्रुः कृशाङ्गः इतस्तत श्चलितुमप्यशक्तः कश्चिज्जीवविशेषः पाषाणादिदूषिते स्थले शेते किल! कोऽसौ? ग्रामान्तरादागतो यः कश्चन भिक्षुको वा? न न। सर्वजनविदितः एतन्नगरकृतजन्मा स्वातन्त्र्यसमरयोद्धा "त्यागी"ति बिरुदभाक् सदानन्दः अयमेव। मृतो वा? न, सम्यक् श्वसिति। परं तादृशः त्यागिवरः किमर्थं पिशाचादिवासयोग्यायां अत्र भूमौ एकाकी शयानो दृश्यते? तत्कृतस्य अत्युत्तमस्य त्यागस्य कृते अस्मादृशैर्जनैर्दत्तं अप्रतिमं अनर्घं त्यागफलं तेनेदानीमनुभूयते। हन्त! भवतु नाम। सोयं यत्किञ्चिद्विवक्षुरिव नेत्रे ईषदुन्मील्य आत्मानं परितो वीक्षते। तत्समीपं गत्वा किं वक्ष्यतीति शृणुमः। महता प्रयत्नेन शनैः शनैरुपविशन् पिपासाशुष्कं स्वाधरं जिह्वयाऽऽर्द्रीकुर्वन् मन्दं मन्दं वदति सः "अहं कश्चन स्वातन्त्र्यसमरयोद्धा। सदानन्दत्यागीति मां जना आह्वयन्ति। आनन्दस्तु मन्नाम्नि परं विद्यते। मज्जीविते सर्वथा तदभाव एवाभूत्।

मातापितृविहीनोहं बाल्ये नानाविधानि दुःखान्यनुभूय, अट्टशूलादिषु (Hotel) सायंप्रातः सेवकवृत्तिमाचरन् कथञ्चित्पञ्चमकक्ष्यां (V Class) परिसमापितवान्। तदुपर्यध्येतुं नाहमशक्नुवम्। तदा काले देशस्वातन्त्र्योद्यमः प्रवृद्धो व्यराजत। सर्वत्र स्वातन्त्र्योद्योगिनः अनेके महान्तः प्रत्यहं तत्र तत्र सभाः परिकल्प्य स्वकीयै निपुणवचोभिः प्रजामनस्सु स्वातन्त्र्याग्निं समुद्दीपयामासुः। अत एव सकला अपि प्रजाः अस्मद्देशस्वातन्त्र्यं लब्धुं, भारतात्पाश्चात्यान् बहिष्कर्तुं च अत्युत्सुकाः समपद्यन्त। गान्धिमहाशयादीनां स्वातन्त्र्यसमरयोधानां वचनानि जनान् परवशानकार्षुः। तदा तन्नियमोल्लङ्घनं न कोपि कर्तुमियेष। एतादृशस्सन्निवेशः मामपि देशस्वातन्त्र्यसमरोद्युक्तं चकार।

तदाप्रभृति भृत्यजीविकां परित्यज्य यत्र यत्र स्वातन्त्र्योद्युक्तानां सभा प्रचलति तत्र तत्र गत्वा महात्मनां मुखारविन्दान्निस्सृतानि अतिमधुराणि वचोमृतान्यापीय द्विगुणितोत्साहः संवृत्तोहम् । भाग्यवशात्क्रमेण गान्धीनेहरूप्रभृतीनां परिचयोपि लब्धः । तदादेशानुसारं सर्वत्र गत्वाऽहं शान्तिप्रधानासु सभास्वनेकासु अस्मद्देशस्वातन्त्र्यावश्यकतां सयुक्तिकं उद्बोधयन् कालान्तरे प्रसिद्धः कश्चन प्रमुखश्च (Leader) संवृत्तः । पाश्चात्यप्रेरिता राजभटाः अस्मादृशान् शतवारं वासानर्हेषु कारागृहेषु निचिक्षिपुः । विविधाः पीडा उत्पादयामासुः । परन्तु अस्मच्चित्तं दृढतरं समजनि । तदा सभासु जनसङ्घे सर्वत्र मम महद् गौरवं, स्फीतो जनादरः, अत्यधिकः प्रजाविश्वासश्च समजनिषत । तदानीमेव गान्धिमहोदयाशानुसारं निम्नकुलोद्भवां काञ्चन कन्यकां उद्वाह्य तया सह कालं अत्यवाहयम् । अत्रान्तरे अस्मत्प्रधानलक्ष्यभूतं भारतस्वातन्त्र्यं शुभे दिने देशक्षेमबद्धकङ्कणानां सतां सन्तोषदायकं अस्माभिर्लब्धम् । प्रजाः कृत्स्ना अपि अदभ्रां मुदमलभन्त । ममापि त्यागीति कश्चन बिरुदः संलग्नः समभूत् । एवंविधः सन्तोषश्चिरजीवी नासीत् । अचिरेणैव कालेन केनचिद्द्रोहिणा गान्धिमहाशया मारिताः । देशः दुःखसागरे न्यमज्जत् । भारतस्वातन्त्र्यप्रदातारः महात्मानः स्वसन्देशान्परं अस्मभ्यं दत्वा स्वयं स्वर्गं अलञ्चक्रुः । अथ स्वतन्त्रभारते नेहरूमहाशयः प्रथमोऽभवन् । एवं कालो महान् व्यतीतः । देशे प्रजासु च प्रभूतः परिणामोऽजायत । स्वातन्त्र्यव्यतिरेकशक्तयः कक्ष्यारूपेण बह्वयः उदभूवन् ।

प्रजामनस्सु त्यागशीलता नितरामनश्यत् । अद्य सर्वेपि धनार्जनमेकमेव प्रधानकर्तव्यं मन्यन्ते । वर्षाभावात् कर्मागारेषु क्रियायाःकरणाच्च आवश्यकानां वस्तुनामुत्पत्तिः न्यूना जाता ।

वस्तूनां आवश्यकता तु अत्यधिका भवति। अत एव अत्यावश्यकपदार्थानां मूल्यं वाचामगोचरं पामरखेदकरं च दृश्यते। ईदृशं वस्तुमूल्यं न मया श्रुतपूर्वं, नापि दृष्टचरम्। मन्मित्राणि च प्रायशो मृताः। अथवा द्वित्रा जीवेयुः। मन्दभाग्येषु तेष्वन्यतमोऽहम्। "सम्पत्सम्पदं विपद्विपदं च अनुगच्छति" इति यदाभाणकं जगति जागर्ति तन्मज्जीविते सत्यमजनिष्ट। प्रथमं मद्भार्या मृता। अपत्यहीनोहं प्रियायाः मरणात् लोके एकाकी परित्यक्तः। स्वातन्त्र्योद्योगिनां गौरवं च कालक्रमेण क्षीणमभवत्। स्वातन्त्र्यावाप्तेः पूर्वं सहस्रशो जनाः मां द्रष्टुं भाषितुं च समायान्ति स्म। अद्य तु एकोपि मत्सविधं नागच्छति, न मां पश्यति। वीक्षणानर्हं वस्त्विव मां दृष्ट्वापि मुखं व्यावर्तयन्ति। सर्वः स्वार्थं समीहते। विद्यायाः भागधेयस्य च अभावात् न कुत्रापि विद्यालयेषु कर्मागारादिषु वा प्रवेशो लब्धः। उदरपोषणाय धनिकगृहादिषु नीचां सेवकवृत्तिं कर्तुं सत्यामप्याशायां मदीयं वार्धक्यं मां प्रतिरुणद्धि। न कस्यापि मयि दयोदेति। एवंविधायां परिस्थितौ स्वैरं तावद्वस्तु मदीयमिति एकं कुटीरमपि नास्ति। अस्मत्सर्वकारः त्यागिनां कृते उपकारकं वेतनं कल्पयामि इत्युद्घोषयति, स्वातन्त्र्यदिने ताम्रपट्टादिकमपि दीयते इति श्रूयते। पत्रिकास्वपि स्थूलाक्षरैः प्रकटीक्रियते। परं न किञ्चिन्मया लब्धम्। किं कर्तुं शक्यते? अत एवेतिकर्तव्यतामूढः क्षुत्पिपासाकुलः क्षीणायुरहं इदानीं सर्वजननिन्दितेऽस्मिन् स्थले शयानोऽन्तकागमनं प्रतीक्षे। किं बहुना? जनाः सकला अपि गुणवन्त एव। न कोप्यपराधस्तेषु। अस्या दु स्थितेः कारणं मदीयं पापमेव। ईदृशी दुर्दशा लोके मद्भिन्नस्य मच्छत्रोरपि मा भवत्विति सर्वेश्वरं प्रार्थये। स्वातन्त्र्यलब्धं सुखं स्वैरमनुभवन्तो जनाः स्वार्थं किंचित् विस्मृत्य, तत्प्राप्तिकारकान् देशत्यागिनः

सर्वानपि यदि साहाय्यकरणेन पोषयेयुः तर्हि स्वर्गमलङ्कुर्वतां सहस्रसंख्याकानां स्वातन्त्र्यसमरयोधानां चित्तानि प्रीतिजुष्टानि भवेयुः। इयमेव मत्प्रार्थना। इदमेव ममाभिलषितम्। लोकाः समस्ताः सुखिनो भवन्तु। हा! किमेतत्? सदानन्दत्यागिनः शिरो नतं भवति? वागपि न श्रूयते? नेत्रे सङ्कुचतः। श्वासोपि क्रमेण विरतः। हन्त! महानुभावोयं जीवितयात्रामैहिकीं परिसमाप्य आमुष्मिकं सुखमनुभवितुं स्वर्गं प्रस्थितः। सज्जनस्यास्यात्मा शान्तिमृच्छतु। अहो! निर्घृणोयं लोकः। अभीष्टसिद्धेः प्राक् जनः तत्सहायकं पुरुषमाश्रयते, कुशलं पृच्छति, सेवते, श्लाघते, मानयति, अभीष्टप्राप्त्यनन्तरं च तं न वीक्षते, न पूजयति न स्मरति, प्रत्युत धिक्करोति, निन्दति च। लोकोपकारायावतरतां निखिलानामपि सतां गतिरेवंप्रायैव। उन्नतस्थलारोहणाय अपेक्ष्यमाणा निश्रेणिस्तत्प्राप्त्यनन्तरं दूरीक्रियते किल? इयमेव लोकनियतिः। अयमेव सकलानुष्ठितः परमाचारः। लोकानुभवशालिना दीर्घदर्शिना महाकविना सत्यमुक्तं "सर्वः स्वार्थं समीहते" इति।





भूतपूर्व भारतराष्ट्रपतीनां

नितान्तवेदान्ततत्त्वनिष्णातानां

**श्रीमतां सर्वेपल्लि राधाकृष्णमहोदयानां**

पञ्चाशीतितमजन्मदिनोत्सवसन्दर्भे

तदाध्यक्ष्यसम्मानिता एषा संस्कृतभाषाप्रचारिणी सभा तेभ्यः चिरायुरारोग्यभाग्यसंप्रदानाय भगवन्तं श्रीनिवासं प्रार्थयते ।

प्रधानमन्त्री
संस्कृतभाषाप्रचारिणी सभा
चित्तूरु

# चित्तूरे संस्कृतदिनोत्सवः



(अत्र भाषमाणः श्री सोमयाजी, उपविष्टः अध्यक्षश्च अवगन्तव्यौ।)

14—8—73 दिने संस्कृतभाषाप्रचारिण्या सभया **श्रीराम-विलाससभामन्दिरे संस्कृतदिनमहोत्सवः** आयोजितः। **श्री पि. वि. रङ्गारेड्डिः** मण्डलन्यायाधीशः सभाया आध्यक्ष्यं अवहत्। तिरुपति केन्द्रीयविद्यापीठप्रवाचकः **श्री डा० डि. अर्कसोमयाजी** संस्कृतस्य प्राशस्त्यमुद्दिश्य उपन्यास्थत्। बहवः पंडिताः पुरप्रमुखाः बालाः बालिकाः च तत्र सममिलन्।



# वन्दे मातरम्

लेखकः श्री आर्. गोपालन्, चित्तूरु.

गैर्वाण्यां मुद्रिता "विद्यया किं प्रयोजनं ?" इति मकुटंयुक्ता कथा युवतिजनविषये कामजलधिनिमग्नानां पुंसां अतिनीचप्रवृत्तिं वर्णयति ।

वर्तन्त एव बहवः पुरुषाः कामाग्निदग्धाः पशुप्रायाः क्रूर-कर्माणश्च । दूषितास्ते सज्जनैः ! न ते लोके प्रतिष्ठां लभन्ते । अपि तु यथा वर्तन्ते कामेन जिताः मानवाः तथैव वर्तन्ते खलु कामजेतारश्च । यथा वर्तन्ते विटाः तथैव वर्तन्ते खलु कुलटाश्च । स्त्रीषु पुनः अद्यापि वर्तन्ते वाराङ्गनाः । वर्तन्ते पुरुषेषु अपि एवं विधाः । यथा केचन पुरुषाः स्त्रीणां विषये अविनीताः प्रवर्तन्ते तथैव काश्चन स्त्रियोऽपि पुरुषाणां त्रिषये मर्यादां अतिक्रम्य प्रवर्तन्ते । यथा युवानः युवतीभ्य प्रेमलेखाः प्रेषयन्ति तथैव युवतयोपि युवभ्यः प्रेमलेखा लिखन्ति । यदैको युवा विमुखां युवतिं अनुनेतुं यतते तदा सा तस्य चेष्टां लोकविदितां कृत्वा तं लोकगर्हितं करोति । यः कश्चित् युवा आत्मनि प्रेमयुक्तां तिरस्कारोति तदा स एव अविनीत इति तया आरोपितनिन्दः लोकापवादपात्रं भवति । स्त्रियः स्वानुरागपात्रान् पुंसः यया कयाचन रीत्या प्राप्यैव स्वोद्यमात् विरमन्ते । यो वा युवा आत्मनि अनुरक्तां स्त्रियं उपेक्षते तस्य विनाशः विनिश्चत एव । नवयुगवनिताः अर्ध-नग्नदेहाः लज्जां विहाय सर्वेषां पुरतः बहिर्देशे संचरन्त्येव खलु । कति युवानः वृद्धाश्चापि ताः दृष्ट्वा कामपीडिताः संजायन्ते !

अपि च काश्चन कुटुम्बिन्यः पार्श्वे स्वपन्तं भर्तॄन् विहाय संकेतस्थानेषु जारपुरुषैः कामकेलीविलासं अनुभवितुं गच्छन्ति । आधुनिकनिशागोष्ठीषु (Night Clubs) पुरुषानपि स्त्रियः अतिवर्तन्ते ।

कामकलायां स्त्रीणां अशिक्षितपटुत्वं वर्तत इत्येतत् सर्वजनविदितमेव । अन्यस्थलेभ्यः आगच्छतां कृते निर्मितेषु अनेकेषु वसतिगृहेषु (Lodgings) असंख्येयाः स्त्रियः उपस्थाय देहविक्रयं कुर्वन्ति खलु । यथा लोकक्षेमकर्यः वर्तन्ते बह्व्यः स्त्रियः, तथैव लोकक्षयकारिण्यश्च ता वर्तन्ते । यथा सज्जनमानिताः स्त्रियः वर्तन्ते, तथैव तैः दूषिताः अपि ता वर्तन्ते । पुरुषेषु यथा केचन विटाः वर्तन्ते तथैव ऊर्ध्वरेतसः जितकामाः ब्रह्मणि विनिवेशितचेतसः लोकपूज्याः सर्वजनोद्धारकाः महात्मानश्च वर्तन्त एव ।

अत्र नाहं विस्मृतवान् महतीः पतिव्रताङ्गनाः क्षमया भूमिं सौन्दर्येण रतिं च जितवतीश्च । ताः सर्वेषां अस्माकं मातृतुल्या एव । भवन्तु तासां पादेषु अस्माकं साष्टाङ्गप्रणिपाताः । एतत्सर्वं अस्याः कथायाः रचयित्रे प्रणिपातपुरस्सरं निवेदयामि । सोऽपि न न वेत्ति । किन्तु मातृभाषापत्रिकासु प्राचार्यमाणाः आधुनिकयुवजनहृदयोत्साहदायिनीः अल्पसंतोषकारिणीः काश्चन कथाः पठित्वा स महाशयः एवं अलिखदिति मन्ये ।

मातृवत्परदारेषु परद्रव्येषु लोष्टवत् ।
आत्मवत्सर्वभूतेषु यः पश्यति स पश्यति ।।



# गांधीकथा

ले. श्री बालगणपतिभट्टः, श्रीरंगपत्तनम्.

रससिद्धाः कवीश्वराः स्वसूक्तिपीयूषप्रवाहमुखेन लोकानां ब्रह्मास्वादसोदरमानन्दं जनयन्तीति समे जानन्ति । एवमेव, नायकाः देशभक्ताः स्वमातृभूम्युद्धारधुरन्धराः अपि तात्कालिकीं देशदशां वीक्ष्यात्मनोऽनुभवपूर्णवचसा लोकान् सचेतयन्ति ।

राष्ट्रस्यास्य महान्नायकतिलकः नाम्नापि तिलकः बालगंगाधरः सर्वप्रथमं "स्वराज्यादानं आत्मनः आजन्माधिकारः" इति श्वेतवर्णीयानां आंग्लानां शासकानां सम्मुखे उद्घोष्य भारतीयान् जागृतांश्चकार । राष्ट्रीयस्वतन्त्रसेनानिर्मापकः शूराग्रणीः सुबासचन्द्रबोसोपि "जय हिन्द" शब्दघोषणेन द्वीपांतरवासिषु भारतीयेषु देशभक्ति - मुद्बोधयामास । स्वतन्त्रराष्ट्रस्य भारतस्य प्रथमः प्रधानामात्यः नेहरूमहाशयोपि "आराम हराम है" (आलस्यं हि महानीचम्) इति जनताजागृतिञ्चकार ।

एतेभ्यः सर्वेभ्योपि महती एका उद्बोधनोक्तिः महात्मगांधीमहोदयेन स्वमुखादुपदेशरूपेण निस्ससार "पहले करो, पीछे कहो" इति । परोपदेशवेलायां सर्वेऽपि पण्डिताः । स्वीयानुष्ठानसमये मुनयोऽपि न तादृशाः । गांधीमहोदयस्य उपदेशवाक्यस्यर्थस्तु "पूर्वं कुरु, पश्चात्कथय" इति । यः न करोति स्वयं तस्य कथने सर्वथाऽनधिकारः । निजकरणेन योऽनुभव उदेति स तु कथने सामर्थ्यमुत्पादयति ।

मुनिसदृशः गांधी स्वकथनविषये स्वयं पण्डित आसीत्। एकदा मगनबाडी आश्रमे एकं नवीनं नियमं प्रचालयामास सः। "सर्वैरपि भोक्तृभिः उपयुक्तानि भोजनपात्राणि नियमितैः द्वित्रैः उच्चाटय प्रक्षालनीयानि" इति। "अनया नूतनया प्रक्रियया लोकेषु भेदबुद्धिः दूरीभवति। सर्वसमताभावोऽवश्यं उदेति" इति महात्मनः आशय आसीत्। अयं नियमः बलवंतसिंहेन श्रुतः। प्रत्यग्रस्य नियमस्य सः विरोधं आत्मनः कुर्वन् अवदत् "महात्मन्! अनेन कार्येण उच्छिष्टक्षालनेन आश्रमवासिषु महती अव्यवस्था जायत" इति। गांधी प्रत्यब्रवीत् "अव्यवस्थायां व्यवस्थाऽऽदानमेव अस्मत्कर्तव्यम्" इति।

एवमुक्त्वा तद्दिनस्य क्षालनकार्यम् महात्मा स्वयमकरोत् पत्न्या 'बा'या साकम्। एतेन तत्रत्येषु स्वयं प्रभावोऽभूत्। दिनात् तस्मादारभ्य यथानियमं सर्वेपि स्वस्वकार्ये तूष्णीं प्रवृत्ता अभवन्।

## श्री वेंकटेश्वर-अखंडज्योतिस्संचारक्रमः

तिरुमलस्थापितेन हिन्दूधर्मप्रतिष्ठानेन ज्योतिस्संचारकार्यक्रम आयोजितः। तन्निर्वहणार्थं तत्प्रतिष्ठानाध्यक्षेण उ. वे. श्री श्रीमन्नारायणजीयर् स्वामिना श्री एस. नारायणरावस्य सहकाराय न्यूनाधिकं चत्वारिंशद्भक्तयुतो बृन्दः संयोजितः। तद्यात्रार्थं च स्वीयः रामदूतशकटोपि संप्रेषितः।

श्रीवेंकटेश्वर (बालाजी) स्वामिगर्भगृहस्थात् अखंडज्योतिषः श्रीजीयरस्वामिभिरेव ज्योतिः प्रज्वाल्य भक्तबृन्दहस्ते प्रदत्तम्। तस्य अवधानेन संरक्षणाय तत्र तत्र ग्रामेषु नगरेषु च भजनमंदिरेषु

तदुत्पन्नज्योतिषः स्थापनाय, अखंडत्वेन सदा संरक्षणाय च आदेश, कृतः । प्रतिभजनमन्दिरं पद्मावतीवेंकटेश्वरचित्रपटः, ज्योतिःपात्रं, ताळयुग्मं वितीर्येत सद्यः । भजनमन्दिरप्रार्थनानुसारं च तदनन्तरं मर्दलादिकानि, मैकपरिकराः श्रीवेंकटसुप्रभातध्वनिफलकेन च साकं प्रदीयेरन् । प्रतिस्थलं च भजनसंघेनानेन नगरवीथीपर्यटनं हरिकथाकालक्षेपः, तुंबीकथा (जंगमकथा), नाटकप्रदर्शनं, उपन्यासाः इत्येवमादिकाः कार्यक्रमाः यथासौकर्यं निर्वर्तनीयाः ।

अपि च प्राथमिकमाध्यमिकोन्नतपाठशालासु विद्यार्थिनां कृते भक्तिनीतिवर्धकाः कतिपयश्लोकाः सम्मुद्रिता वितीर्यन्ते । तेषु परीक्षा च प्रचाल्येत । परीक्षार्थमुपस्थितेभ्यः विद्यार्थिभ्यः प्रत्येकमेकैकं रूप्यकं, तदुपाध्येयेभ्यः तत्सन्नाहितविद्यार्थिसंख्यानुगुणं प्रतिविद्यार्थि रूप्यकद्वयं च पारितोषिकं दीयेत ।

शिथिलमन्दिराणां पुनरुद्धरणाय आर्थिकसहायः प्रदीयते । हरिजनवाटीषु तु पूर्णं व्ययं अंगीकृत्य मन्दिराणि निर्मीय तदर्थं दीयेरन् । एतादृशः तत्कार्यक्रमः ।

१२–९–७३ दिने श्रीवेंकटेश्वरसंचारज्योतिः चित्तूरमागच्छत् । पुरस्थैः सादरं स्वागतेन सम्मानितं तत् श्रीरामविलाससभाभवने समस्थाप्यत । ततः तत् भजनगोष्ठया साकं पुरवीथीषु संचरत् कलक्टरभवनप्रान्तं यदाऽगच्छत् तदा श्री वल्लियप्पन् कलेक्टरमहोदयः तत् सममानयत् । मण्डलाधिपसहिता सा भजनगोष्ठी ज्योतिषा सह चित्रगृहीता आसीत् । रात्रौ च "हरे राम" मन्त्रमात्रोच्चारणयुतं रामलीलानाटकं प्रदर्शितं, नगरजनान् मन्त्रमुग्धानकरोत् ।

बहवः भजनसंघाः हिंदूधर्मप्रतिष्ठानानुबन्धत्वमाप्नुवन् ।

भजनगोष्ठी च संस्कृतसभाभवनमानीता संस्कृतसभाभजनमन्दिरे गोष्ठीं प्रवर्त्य समभ्यनन्दत् ।

**धर्मो रक्षति रक्षितः ।**

# धनमूलमिदं जगद्

**लेखकः श्री ना. ब. निगमान्तः, प्रोद्दुटूरु.**

सर्वत्रापि जगत्यसत्यभरिते प्रामुख्यमत्यादरं
सर्वंकारि धनं समावहति, नास्त्यन्यत्क्रियासाधकम् ।
सर्वे द्रव्यसमार्जनैकधिषणाः स्वार्थप्रधाना नराः
रैदासा, भुवनं चकासति ततश्शङ्केऽर्थमूलन्त्विति ॥
कर्तुं कर्म सुखावहं कृशमपि प्रत्नं नवीनं नृणा-
मत्यन्तं श्रमदायि वा बहु धनं लोके तदावश्यकम् ।
देशक्षेमकरी कृषिः किल धनं कार्येति निश्चीयते
क्षेत्राकर्षणबीजदोहदजलक्षेपाय तत्कांक्ष्यते ॥
कर्मागारमदभ्रवस्तुनिचयप्रोत्पादकं किंचन
प्रारब्धुं प्रथमं विचेयममितं द्रव्यं हि तन्मूलकं ।
सद्वृत्तिः खलु दुर्लभा विधिवशात्प्राप्ता यदि स्यात्तदा
पूर्वं देयमदो धनं कृशधनैः उत्कोचमेवं रहः ॥
स्वीकुर्वन्ति धनं समार्जनकरव्याजेन राज्याधिपाः
केदारस्य कृते कृते च निखिलागारस्य दुर्जीविनः ।
मर्त्यस्यास्य करान्तराणि विहितान्यसमत्प्रभुत्वेन च
नानाकष्टसमार्जितस्य वसुनो नाशः किलैवंविधः ॥
लोकेऽस्मिन् सकलासु बालककलाशालासु शालासु वा
देयं तत्र धनं प्रवेशफलकं सद्वैद्यशालासु च ।
नो चेन्नास्ति समस्तलोकसुहृदोपीशस्य तत्र स्थलं
सर्वत्रापि धनं करोति मनुजस्याक्लेशमन्यत्तु न ॥
देवः सेव्य इहालयेद्य सुदिने चिन्तेति जाता यदि
सङ्गीतादिसभास्तथा हरिकथागोष्ठीश्च गन्तुं यदि ।
स्यादिच्छा प्रविविक्षुभिर्बहु धनं देयं टिकट्रूपभाक्
स्वैरं कर्तुमहोपि भैक्ष्यचरणं शक्ता न रुद्धाः किल ॥

अतः –

धनं भवति मूलं हि लोके सर्वस्य कर्मणः ।
अत एव बुधैः प्रोक्तं धनमूलमिदं जगत् ॥

***

तस्मिन् ब्राह्ममुहूर्ते शंखारावमिव श्रुयमाणं तं श्लोकं आकर्ण्य तत्सन्देशोपदेशा ववगत्य ससंभ्रमं बहिरागतः व्याकरण-विद्यार्थी – "को भवान् ! 'मूढमते!' इति संबोधनं कमुद्दिश्य? मामेव किं? व्याकरणशास्त्राभ्यासः किं मौढ्याय? शास्त्राभ्यास-मन्तरा कथं ज्ञानलाभः ?" इति पप्रच्छ।

शंकरः– वत्स ! ज्ञानप्राप्त्यै अवश्यं विद्याभ्यासः साधनमेव। सत्यमेवैतत्, यत् तर्कव्याकरणादिशास्त्रपाण्डित्यं सत्यान्वेषणाय उपकरोतीति। परन्तु, शास्त्रसाधनेऽसमर्थैः तदभ्यासाय कालो वृथा न यापनीयः। आयुषि अन्तं गते, आसन्नमृत्युं व्याकरणसूत्रं वा शास्त्रं वा न रक्षति।"

व्याकरणविद्यार्थी – तर्हि, शास्त्रेष्वकुशलानां अस्मादृशानां कस्तरणोपायः? स्वामिन् !

शंकरः – ऋषिभिर्दृष्टस्सत्यमार्ग एव विश्वासपूर्वकं स्वीक-र्तव्यः सामान्यैस्तरणाय।

व्या. वि. – किं तत्सत्यं? उपदिश्यताम्। अवहितोऽस्मि अवश्यं स्वीकर्तुम्।

तदा शंकरः द्वादशभिः श्लोकैः इत्थं ज्ञानोपदेशमकार्षीन्–

"यल्लभसे निजकर्मोपात्तं वित्तं, तेन विनोदय चित्तं, जहीहि धनागमतृष्णां, अर्थमनर्थं भावय नित्यं, अर्थः किमर्थः? भार्यापुत्रा-द्यर्थश्चेत् – यावत्पवनः निवसति देहे तावत्कुशलं पृच्छति गेहे, गतवति वायौ देहापाये भार्याबिभ्यति तस्मिन् काये।

सती सुन्दरी प्रेमभावे निबद्धेति भ्रान्ति विमुञ्च। निदाघे सरोवरो निर्जलो यथा भवति, तथा वार्धके यौवनमन्तं गच्छति। बहिःप्राणतुल्या भार्याऽपि वार्धके विरज्यते, देहावसाने विशिष्य बिभ्यति च। "केऽयं भार्येति; कोऽयं पुत्र इति; कोऽहं? कुत आयातः? संबन्धो ममैतेषां च?" – इत्यालोच्य सत्यमवगच्छ।

जीवितं पद्मपत्रगतजलबिन्दुसदृशं, चंचलं, "इदं मदीयं शरीर" मित्यभिमानेन संरक्षणेऽपि रोगग्रस्तं सत् तद्बाधाकरमेव भविष्यति। कुतः सुखं? न धनेन, न वा यौवनेन; नाऽपि परिवारेण। एतेन दुःखमेव, न सुखम्।

कालो गच्छति; यावदायुरन्तं गच्छति तावज्जागृहि। मृत्योः पूर्वमेव जागृहि। बाल्ये तावत् क्रीडासक्तिः; तारुण्ये किल तरुणीचिन्ता; वार्धके मुनिवृत्तिर्दुर्घटा स्यादेव – एवं रीत्या काले यापिते, गोविन्दपदारविन्दध्यानाय कः कालः समुचितस्समुपलभ्येत। अतः त्वरितमेव ब्रह्मविचारे प्रवर्तस्व। सत्सांगत्यं काङ्क्षस्व। अतोऽनित्यात् संसारात् निर्ममो भूत्वा शुद्धं ज्ञानं शाश्वतीं च शान्तिं लब्ध्वा गोविन्दं भज; भज गोविन्दम्।"

अथ स वैयाकरणतरुणः अविलम्बेन तरणोपायं दर्शयतां शंकरभगवत्पादानां सन्निधौ साष्टाङ्गदण्डप्रणामं विधाय गृहाभ्यन्तरमगच्छत्।

भगवतो ब्रह्मणो मुखात् निस्सृतवेदराशिरिव जगद्गुरोः शङ्करस्य वदनारविन्दा द्धाराधारया विनिर्गता "भजगोविन्द" श्लोकराजिः सकलोपनिषत्सारसम्पन्ना तदानीन्तनवैयाकरणस्यैव न, किन्तु जगति विद्यमानानां समेषामपि मानवानां मार्गदर्शिकाऽभूत्।

## १०. भट्टपादः

शङ्करभगवत्पादाः शिष्यवृन्देन साकं काशीं हित्वा प्रयागक्षेत्रं प्राप्ताः। तस्मिन् तीर्थराजे निवसति शंकराचार्ये कदाचिद् ब्रह्मचारी कश्चिदागत्य "आर्याः! अस्मद्गुरुचरणाः भट्टपादमहोदयाः चितां गताः प्राणत्यागं कर्तुमुद्युक्तास्सन्ति। बहुधा निवर्तयितुं प्रयत्ने कृतेऽपि, निष्प्रयोजनमासीत्। अतः यूयमागत्य रक्षत" इति प्रार्थयामास।

शंकरः चितामुपेत्य शिष्यगणैस्सह, तत्रत्यं भट्टपादं प्रति – आर्य! किमर्थं भवान् इत्थं देहं त्यक्तुमुद्युङ्क्ते? चतुर्वेदानामूल-चूडं पठित्वा अधिगतसकलविद्यो भवानिति अश्रौषम्। मद्रचितं ब्रह्मसूत्रभाष्यं तत्रभवते श्रावयितुमुत्सुकोऽस्मि"– इत्याह।

"को भवान्? किं बालयतिः सूत्रभाष्यप्रणेता शंकरोऽसि? अवसानसमये वा भवदीयसंदर्शनभाग्यं प्राप्तम्। अथातः सूत्र-भाष्यं श्राव्यताम्; शृणोमि तावत्" इति भट्टपादः साभिलाषं प्राह।

शांकरभाष्यं श्रुत्वा भट्टपाद प्रशशंस। "प्राणान् त्यक्तु-कामः सदीक्षं चितां गतोऽस्मि; नो चेत्, भवदीयभाष्यस्य टीकां प्रणीय कृतार्थमात्मानं भावयेयम्।" इति स चिन्तयामास। शंकरः दारुणामिमां दीक्षां कुतो गतो भवान्? भट्टपादः गुरुद्रोहं, दैवद्रोहं चाकरवम्। एतद्दोषद्वयं कथं सम्भूतमिति चेत् जिज्ञासा तर्हि-श्रूयताम्।

यदाऽहं वेदोक्तेन विधिना यज्ञयागादिकं विधाय देवताप्रीति-स्सम्पादनीयेति प्रबोधयन्नासं तदा बौद्धाः– "नैव देवता देवा वा, नैव वेदा सत्या; असत्यमशेषं तत्साहित्यं निश्शेषं दग्धुं योग्यं" – इति प्रचारे बद्धकंकणा बभूवुः। बौद्धसिद्धान्तं खण्डयित्वा वैदिकधर्ममार्गमुद्धर्तुं गाढाकाङ्क्षा मे सञ्जाता। परन्तु बौद्ध-शास्त्राणि सग्रमनधीत्य बौद्धैः सह वादोपक्रमं कर्तुं वा तन्मतं खण्ड-यित्वा स्वमत स्थापयितुं वा न शक्यमिति कश्चिदुपायो मयाऽलो-चितः। बौद्धसिद्धान्तरहस्यानि ज्ञातुं भिक्षुर्भूत्वा बौद्धपण्डितं कंचि-दाश्रित्य "आर्य! विद्यार्थी सन् भवत्सन्निधिमागतोऽस्मि" इति तं पर्यपृच्छम्। सोऽपि निश्शङ्कं मां शिष्यत्वेन परिगृह्य बौद्धमतरह-स्यानि बोधयामास।

एकदा बौद्धपण्डितः कश्चित् अस्मद्गुरुकुलमागत्य वेदान् यथेच्छं निन्दितुमारेभे। कर्णकठोराणि तस्य दूषणभाषणानि श्रावं

श्रावं मदीयं मनः खिन्नमभूत्, नेत्राभ्यां अश्रुधारा निर्गता । मद्दुःखं अवगतवन्तः सतीर्थ्याः सशङ्कं मां प्रति रहसि गुरवे निवेदयामासुः – "आर्य ! नाऽयं नूनं बौद्धः; अपितु, बौद्धधर्मरहस्यं ज्ञातुमागतो वैदिक इव दृश्यते; नो चेत् वेददूषणे कुतोऽयं वेदनामनुभवति; दुःखितश्च भवति ?" इति ।

गुरुर्यथार्थं ज्ञात्वा "बाढं, वञ्चितोऽस्मि । यथोचितमयं दण्डनीयः" इत्यादिदेश । भाविनीं विपदमविदित्वाऽहं सौधोपरितले यदा सुखसुप्तोऽभूवम् तदा ते मां अधश्चिक्षिपुः । वृक्षशाखाहतनेत्रान्तः प्रबुद्धः स्वापात् प्राणापायं अवगच्छन् वेदपुरुषं सभक्तिश्रद्धमस्मार्ष मित्थम् – "यदि वेदाः प्रमाणं, तेनैव सत्येन माऽभूवं विपन्नोऽधोगतोऽह"मिति ।

वेदविश्वासो मां ररक्ष । तत् स्थलं त्यक्त्वा तत्प्रदेशशासकं सुधन्वनामानं आश्रयितुं अगच्छम् यावदहं राज्ञः सभां प्राप्नुवम् तावदेव बौद्धपण्डितैस्सा सभा पूर्णाऽऽसीत् । तेषां उपदेशान् राजा सभक्तिश्रद्धं शृण्वन्नास्त । तत्समये समीपतरवर्तिनि वृक्षे शाखाग्रभागमधिरुह्य कश्चित्पिकः कूजन्नास्त । सन्दर्भशुद्धिं द्योतयन्नहं "पिक ! काकैस्सह वससि; नो चे॰ दवश्यं प्रशंसाभाजनं भवितुं अर्हसि ।" इत्यर्थयुक्तं कंचन श्लोकमन्यापदेशं विधयाऽवोचम् ।

तच्छ्लोकश्रवणसमनन्तरमेव बौद्धाः प्रबुद्धाः सर्वे सम्भूय "अरे ! रे ! ! वैदिक ! कियत् साहसम् ! किं वयं काकास्स्म ? यद्यस्ति वाचोयुक्तिः, तर्हि वादाय सन्नद्धो भव; अलं परदूषणेन" इत्याहुः । बौद्धमतरहस्यज्ञोऽहं वादे तान् लीलया पराजित्य तन्मतं खण्डयित्वा स्वमतं - वैदिकमतं स्थापयित्वा तत्र रुच्युत्पादनार्थं तत्प्राशस्त्यं उपन्यास्थं सुबहु सुधन्वने राज्ञे ।

# श्रीपेरुंबूदूरे श्रीरामानुजक्रतुः

सेप्टंबरमास १५ तिथेः १९ तिथिपर्यन्तं श्रीमन्नारायणरामानुजजीयरस्वामिनां संकल्पेन अतिशान्तिनामा श्रीरामानुजमहाक्रतुः महता वैभवेन निर्वर्तितः। तत्संदर्भे श्रीरामानुजमूलामूर्तेः, आदिकेशवमूलमूर्तेश्च जटीबन्धादिक्रियाश्च निर्वर्तिताः । तत्संदर्भे त्रिचतुश्शतं पण्डिताः तत्र सममिलन्, भक्ताश्च असंख्येयाः । अवतारमण्डपे हनुमद्देवालये मठेषु च विदुषां उपन्यासाः प्रावर्तन्त । प्रतिदिनं श्रीभाष्यभगवद्विषयपूर्वाचार्यसंप्रदायादिविषयेषु विविधेषु संस्कृतान्ध्रांग्लद्रमिडभाषासु प्रसंगा निरवाह्यन्त ।

सकलदिव्यदेशानां विशेषप्रदर्शनार्थं प्रदर्शनशाला काचिदुद्घाटिता, यत्र तत्तद्रूपचित्रैस्साकं श्रीवैष्णवसांप्रयग्रन्थाः मुद्रिता अमुद्रिताः अधुना दुर्लभाश्च प्रदर्शिताः ।

तत्र समावेशे विशिष्टाद्वैतसिद्धान्तस्य प्रकाशः सविशेषोऽन्वभूयत ।

## सूचना

परिचयाभिज्ञविचक्षणसमर्थपरीक्षापाठ्यपुस्तकानि सभायां लभ्येरन् ।

प्रधानमन्त्री.
संस्कृतभाषाप्रचारिणी सभा,
चित्तूरु. (आं. प्र.)

*R. N. 1845/60.* *Postal R. H. No. 493.*
Licensed to Post without Prepayment. LICENCE No. 57.
आन्ध्रप्रदेशसर्वकारेणानुमोदिता R. C. No. 27-A 3/65 Dated 14-7-65.

भारतसर्वकारेण पुरस्कृता च

## गैर्वाणी

वार्षिकम् ४-००

# प्रहेलिका

कुध्रजासृष्टद्वारक्षं
अदूरमगजाननम् ।
नायकञ्च विनोपेतम्
दशनैकमहं भजे ॥

कुध्रः = पर्वतः हिमवान्, तस्मत् जाता = गिरिजा, तथा सृष्टः द्वार्रक्षः, यः, तं; अकारदूरं अगजाननम् = गजाननम्, विनोपेतं नायकं = विनायकं, दशनैकं = एकदन्तं, अहं भजे ।

– श्री बालगणपतिभट्टः, श्रीरंगपत्तनम्.

Published by Sri N. Ramanatha Iyer B. A; B. L., Advocate
& Secretary S. B. P. Sabha, Chittoor (A. P.)
Printed by Sri T K Thiruvengadacharya
at Vijaya Press, Chittoor (A. P.) C 1500